॥ श्रीः ॥

# रक्तदानम्

(सामाजिकं सामयिकञ्च द्व्यङ्कि रूपकम्)

—०—

विद्वत्कुल सम्मानितेभ्यः परम पाण्डित्य-मण्डितेभ्यः डॉ. सत्यव्रत शास्त्रिमहोदये-भ्यः सादरं [illegible] प्रदत्तम् ।
वनेश्वरपाठकः


प्रणेता

**आचार्य डॉ० वनेश्वरपाठकः**, एम० ए०, डी० लिट्०

(उत्तरप्रदेशशासनद्वारा साहित्यिकपुरस्कारेण सम्मानितः)

संस्कृतविभागाध्यक्षः

सेंट जेवियर्स कॉलेज, राँची, बिहारः, (भारतम्)



वितरणकर्त्ता

**सुबोधग्रन्थमालाकार्यालयः,**

पुस्तकपथः, राँची ।

ज्योति, कन्नूलालपथः,

मीठापुर, पटना-८०००१

रक्तदानम्

## समर्पणम्

ययोः पुण्यात्मनोः पुण्यप्रतापेन शुभाशिषा ।
मयाप्तः सुधियां स्नेहस्तौ मातापितरौ स्तुवे ॥
साहित्यं शब्दशास्त्रञ्च यस्मादवगतं मया ।
तमहं सादरं नौमि भ्रातरं भुवनेश्वरम् ॥

कृपापात्रं वनेश्वरः

# प्रास्ताविकम्

काव्यरचनाया विविधासु विधासु नाटकमेका महत्त्वपूर्णा विधा। रमणीयताया दृष्ट्या तु नाटकं काव्यम् (श्रव्यम्) अतिशय्य वर्त्तते। अतिप्राचीनकालतः प्रचलितेयमुक्तिरप्यमूमेवार्थं पुष्णाति—"काव्येषु नाटकं रम्यम्" इति। 'अवस्थानुकृतिर्नाट्यम्'[1] इति परिभाषितमर्थमादधानं नाटकं (श्रव्य) काव्यापेक्षया जनजीवनेन सह समधिकं सम्पृक्तमास्ते। देश-काल-परिस्थितीनामनुसारं जनमनोरञ्जनं नाटकस्य परमं प्रयोजनम्। नाटकं विद्वत्समाजस्य सामान्यजनसमाजस्य च कृते समरूपमेवोपयोगि विद्यते। संस्कृतनाटकेषु संस्कृत-प्राकृतेतिभाषाद्वयप्रयोगोऽपीदमेवोद्देश्यमभिद्योतयति। यां काम-प्यवस्थामापन्नो जनो नाटकेन स्वकीयमनसो विश्रामं लभते। इदमेव नाटकीयं प्रयोजनमनुवदता आद्यनाट्याचार्येण भरतेन भणितम्—

"दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम्।
विश्रामजननं लोके नाट्यमेतद् भविष्यति[2]॥"

भरतमनुसरता महाकविना कालिदासेनापि विभिन्नरुचीनां जनानां समाराधनम् (मनोरञ्जनम्) एव नाटकस्य प्रयोजनं प्रतिपादितम्—"नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्[3]।" अनया दृष्ट्या नाटककारः काव्यकारस्यापेक्षया समाजं प्रत्यधिकमुत्तरदायित्वमनुभवति।

---

१. दशरूपकम्, १/७
२. नाट्यशास्त्रम्, १/११४
३. मालविकाग्निमित्रम्, १/४

विभिन्नरुचीनां जनानां समाराधनैकफले, त्रैलोक्यस्यास्य सर्वस्य भावानुकीर्तने, नानाभावोपपन्ने, नानाऽवस्थान्तरात्मके, सर्वोपदेश-जनने च नाट्येऽस्मिन् सर्वं ज्ञानम्, सर्वं शिल्पम्, सर्वा विद्याः, सर्वाः कलाः, सर्वं शास्त्रम् श्रुति-स्मृति-प्रतिपादितं सर्वं कर्म समन्वितं वर्त्तते। यथाह भरतः—

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते[1] ॥"

नाट्यं हि—"धर्म्यमर्थ्यं यशस्यञ्च सोपदेशं ससंग्रहम्। भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥ सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्," भवति। तद्धि वेदोपवेदैः सम्पन्नः पञ्चमोवेदः[2] (नाट्यवेदः)।

अत एव नाटकं कवित्वस्य चरमोत्कर्षो मन्यत—'नाटकान्तं कवित्वम्' इति।

नाटककारः कवेरपेक्षया समाजं प्रति (विशेषतो वर्त्तमानसमाजं प्रति) अधिकनिष्ठावान् भवति। अतएव पौराणिकम् ऐतिहासिकं वा ख्यातवृत्तमाश्रित्य लिखितेषु संस्कृतनाटकेषु सर्वजनमनःसमाराधनं सर्वजनोपयोगिता च महत्त्वपूर्णां भूमिकामाधत्तः। प्राचीनशैलीं तथा पौराणिकं विषयमाधृत्य लिखितेषु प्राचीननाटकेष्वपि समसामयिकैः

---

१. ना० शा०, १/१०९

२. ,, ,, १/८-१८

संविधानैर्विचारैश्च नवीनतामाधातुं श्लाघनीयः प्रयासः कृतो विद्यते । 'पुराणमित्येव न साधु सर्वम्'[1] इति क्रान्तिकारि वचो निगदतः कालिदासस्यापि पौराणिकाख्यानानां नवेषु प्रतिमानेषु रूपान्तरीकरणमभिमतं प्रतिभाति ।

वर्त्तमानयुगे जनरुचेर्महत् परिवर्त्तनं सञ्जातमस्ति । सम्प्रति जनानां हृदि पौराणिकी आस्था शिथिला सञ्जाता । मानवस्य युगानुरूपः कश्चन नवीनो विकासः सञ्जातोऽस्ति । अस्मिन् भौतिके युगे समस्यानामनेकासामभ्युदयात् काव्यनाटकेषु समसामयिकसमस्यानां तासां समाधानानाञ्च निर्देश आवश्यकः । आधुनिकाः साहित्यकाराः साम्प्रतिकीं युगानुरूपां प्रवृत्तिं पुरस्कृत्य काव्यनाट्यादीनां निर्माणे सम्प्रवृत्ताः सन्तीति सन्तोषस्य विषयः ।

अस्माकं प्राक्तनानि काव्यनाटकानि यद्यपि पौराणिकानि प्राचीनकालतो लोकख्यातानि वा इतिवृत्तान्यादाय निर्मितानि तथापि तेषु नवीनविचारोन्मेषो दृश्यते । अधुना वैज्ञानिकाविष्काराणां विशेषतश्चलचित्रस्य प्रभावात् परिवर्त्तितां जनमनोवृत्तिमभिलक्ष्य तस्यास्तोषाय नवीनं धरातलमाधृत्य नवां समस्यां समाश्रित्य च निर्मितेषु काव्यनाटकेषु युगानुगा प्रवृत्तिः परिलक्ष्यते ।

साम्प्रतं समकालीनसामाजिकमहत्त्वमनुसृत्य 'बालविधवा, कटुविपाकम्, संस्कृतवाग्विजयम्, प्रतिक्रिया, धर्मस्य सूक्ष्मा गतिः, कस्याहम्,

---

१. मालवि० १/२

अरण्यरोदनम्, महाश्मशानम्, गुरुदक्षिणा, प्रबुद्धभारतम्, मिवारप्रतापम्, छत्रपतिसाम्राज्यम्, शिवाजीचरितम्, इत्यादिनाटकानि लिखितानि सन्ति। एतादृशनाटकानां निर्देशः श्रीवाचस्पतिगैरोला महोदयेन स्वकीये इतिहासग्रन्थे, डॉ० रामजीउपाध्यायेन[1] 'सागरिकायाः' षोडशवर्षाङ्के सविवरणं कृतः।

काव्यतो (श्रव्यकाव्यतः) नाटकमधिकरमणीयं प्रभावपूर्णञ्च भवति; अतो नाटकानां शिल्पविधाने, वस्तुविन्यासे, रसनिबन्धने, आकर्षणोत्पादने च सर्वत्र युगानुहारि नवीनत्वमपेक्षितम्।

साम्प्रतं रङ्गमञ्चसौविध्यं जनमनोवृत्तिञ्चापेक्ष्य संस्कृतेऽपि स्वल्पाङ्कानां स्वल्पसमयसापेक्षाणां नाटकानां निर्मितौ नाटककाराः प्रवृत्ता दृश्यन्ते। संस्कृते लघुनाटकानां रचना-प्रवृत्तिः पाश्चात्त्यैरेकाङ्किनाटकैरनुप्राणिताऽस्ति। यद्यपि रूपकेषु[2] भाण-व्यायोग-वीथी-

---

१. डॉ० उपाध्यायेन 'विंशशताब्द्याः नाटककाराः' इति ग्रन्थस्य निर्माणं कृतम्। अधुना स 'विंशशताब्द्याः काव्यकाराः' इत्यस्य रचनायां व्यापृतो वर्त्तते।

२. रूपकाणि दश—नाटकम्, प्रकरणम्, अङ्कः, व्यायोगः, भाणः, समवकारः, वीथी, प्रहसनम्, डिमः, ईहामृगः—

"नाटकं सप्रकरणमङ्को व्यायोग एव च।
भाणः समवकारश्च वीथी प्रहसनं डिमः।
ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे॥" (नाट्यशास्त्रम्, १८/२)

"नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥" (दशरूपकम्, १/८)

प्रहसनाङ्कादीनि, उपरूपकेषु[1] रासक-गोष्ठी-श्रीगदित-प्रेंखणोल्ला-प्यादीनि च लघुनाटकानि (किञ्चित्परिवर्त्तनैस्तानि एकाङ्कान्यपि) सन्ति, तथापि तेष्वाधुनिकशिल्पसज्जादीनामभावो विद्यते। आधुनिकानि संस्कृतलघुनाटकानि आकाशवाण्याऽपि प्रभावितानि सन्ति। आकाशवाण्या विभिन्नकेन्द्रेभ्यः संस्कृतस्य रूपकाणि (विशेषतो भासस्य[2] रूपकाणि) प्रतिमासं प्रसार्यन्ते। संस्कृतस्याधुनिकनाटककारेषु केचन आकाशवाणीरूपकाणाम् (रेडियोरूपकाणाम्) अपि निर्माणे प्रवृत्ताः सन्ति। अस्यां दिशि सन्तोषप्रदो विकासो दृश्यते। आकाशवाण्या इयं संस्कृतसेवा श्लाघ्याऽस्ति।

---

१. उपरूपकाणि अष्टादश-- नाटिका, त्रोटकम्, गोष्ठी, सट्टकम् नाट्यरासकम्, प्रस्थानम् उल्लाप्यम्, काव्यम्, प्रेंखणम्, रासकम्, संलापकम्, श्रीगदितम् शिल्पकम्, विलासिका, दुर्मल्लिका, प्रकरणी, हल्लीशः, भाणिका। (साहित्यदर्पणः, ६/४-६)

२. भासस्य नाटकानि रङ्गमञ्चस्य दर्शकानाञ्च सर्वथाऽनुकूलानि सन्ति। आधुनिकयुगेऽपि तस्य नाटकानि घटनावैचित्र्यादिनाटकीय-तत्त्वानां दृष्ट्या यथा चेतोहराणि मञ्चनीयानि च सन्ति तथा नेतराणि। सामाजिकतायाः स्वल्पसमयापेक्षिततायाश्च दृष्ट्या भासस्य नाटकानां यथा महत्वं वर्त्तते तथा नेतरेषाम्। सामाजिकताया दृष्ट्या भासस्य चारुदत्तनाटकस्य, तदाधृत्य निर्मितस्य शूद्रकस्य मृच्छकटिकप्रकरणस्य च प्राचीननाट्यसाहित्ये यत् स्थानं तन्नेतरस्य। संस्कृतसाहित्ये भासो लघुनाटकरचनापरम्परायाः प्रवर्त्तकः।

इमाः सर्वाः साम्प्रतिकीः विशेषता अनुध्यायता मया 'रक्तदानम्' नाम एष नवः प्रयोगो विहितः। एष प्रयोगः सर्वथा नवीनः, नापरैर्मनागपि संस्पृष्ट इति नाहमभिमन्ये। अस्मिन् प्रयोगे मया समाजे कुष्ठरोग इव प्रसृता तिलकयौतकादानप्रथा या, शिक्षया समुन्नतेऽपि समाजे मुखं व्यादाय स्थिता एका जटिला समस्या वर्त्तते, सा एव दुःसमाधेया समस्या, तस्याः समाधानस्य निर्देशश्च विषयीकृतः। एष प्रयोगो विदुषां तोषाय सर्वथा सम्पत्स्यते इति मम चेतः प्रतीतिविरहितं वर्त्तते। तथापि गुणैकदृशः परगुणपरमाणून् पर्वतीकृत्य निजहृदि विकसन्तः सन्तोऽत्रापि कमपि तोषमनुभविष्यन्तीति साहसमादधानो भवतां समक्षं प्रस्तौमि प्रयोगमिमम्, स्वस्या अक्षमतायाश्च कृते क्षमां याचमानः समापयामि च प्रास्तविकमिदम्।

२०३७ तमवैक्रमाब्दीया
मार्गशीर्ष शु० पञ्चमी।
१९८० खीस्ताब्दीयो
दिसम्बरमासः।

विदुषामाश्रवः
वनेश्वरपाठकः

# रक्तदानम्

## प्रथमोऽङ्कः

(प्रथमं दृश्यम्)

शम्भुर्लब्ध्वा जरठवृषभं वाहनं स्वे विवाहे
नासाद्यान्यत् किमपि सुखदं वस्तु जामातृयोग्यम् ।
रुष्टो दक्षे प्रियसहचरीं प्राप्य दक्षात्मजां स
तुष्टः, सर्वानवतु सततं कापि तुष्टिस्तदीया ॥१॥

अपिच–रुष्टिः सा शंकरस्याद्य हन्यात् सामाजिकीं रुजाम् ।
तुष्टिस्तस्य प्रकुर्वीत स्वस्थं सामाजिकं वपुः ॥२॥

सूत्रधारः— (प्रविश्य)

संश्रित्य यां सुरगिरां कवयोऽभिनन्द्याः
काव्यं नवं नवरसैः सरसं सृजन्ति ।
या भारती भरतभूजननीव वन्द्या
श्रद्धामयेन मनसा समुपास्महे ताम् ॥३॥

अलमतिविस्तरेण । अहो ! परिषदियमतीवोत्सुका प्रतिभाति प्रयोगमस्माकमवलोकयितुम् । तत् कुटुम्बिनीमाह्वयामि । (नेपथ्याभिमुखं विलोक्य) आर्ये ! इतस्तावत् ।

नटी— (प्रविश्य) आर्य ! इयमस्मि किं क्रियताम् ?

सूत्र०—आर्ये ! सुरभारतीसमुपासकानां परिषदियमस्माभिः समाराधनीया वर्तते। तदस्याः समाराधनाय प्रस्तूयतां किमपि नवीनं संगीतकम् ।

नटी—यदार्यं आज्ञापयति । (नृत्यन्ती गायति)

नगरे नगरे ग्रामे-ग्रामे क्रीडतु संस्कृतवाणी ।
भवने भवने वदने वदने नृत्यतु संस्कृतवाणी ।।
।। नगरे नगरे ०।।

वेदस्मृतिप्रतिपादितकर्म—धर्माद्याचरणानि ।
पुनः प्रकाश्य मनस्तिमिराणि हरतु हरतु सर्वाणि ।।
।। नगरे नगरे ०।।

विश्वबन्धुताभावोत्कर्षं मनसि मनसि सुखशान्तिप्रहर्षं
राष्ट्रभावनासुधाभिवर्षं विदधतु तव वचनानि।
अमरभारती श्रिया सुहासिनी जयतु जयतु कल्याणी ।।
।। नगरे नगरे ०।।४।।

सूत्र०—आर्ये ! सुरभारतीश्रद्धासमन्विता ललितमधुरा ते गीतिः संस्कृतभाषां प्रति कमपि नवीनमनुरागं रागञ्चाभिव्यनक्ति, संस्कृत-भाषायाः पुनरुज्जीवनञ्चाशंसते ।

नटी—आर्य ! जनास्तु कथयन्ति 'संस्कृतभाषा मृता' ।

सूत्र०—आर्ये ! क एवं कथयन्ति ?

नटी—आर्य ! आधुनिकाः सुबुद्धा जनाः ।

सूत्र०—आर्ये ! ते सुबुद्धा न हि दुर्बुद्धाः सन्ति । न जाने केनाप्यन्येन दुर्मुखेन स्वमुखादिदं दुर्वचो निःसारितं संस्कृतं मृतभाषेति । तदनुयायिनोऽपरेऽप्यन्धधियो वक्तुमारभन्त 'संस्कृतं मृतभाषा, संस्कृतं मृतभाषा' इति । वस्तुतस्ते परप्रत्ययनेयबुद्धयो मूढधियः सन्ति ।

वेदाः साङ्गा रहस्यैरतिसुविततः कर्मकाण्डं स्मृतिश्च
मीमांसान्यायनीत्याद्यमरकृतयो ज्यौतिषस्वास्थ्यविद्या ।
काव्यं नाट्यं पुराणं विविधविषया लौकिकालौकिकाश्च
बद्धा यस्यां कथं स्यादमृतमधुरा देवभाषा मृता सा ॥५॥

अपि च—यस्यामास्ते विदितमहिमा भारतीयेतिहासः,
यस्यामास्ते जगति विदिता संस्कृतिर्भारतीया ।
सम्पोषं या नयति निखिलं वाङ्मयं भारतीयं
सा चेन्मृत्युं व्रजति सुरगीर्भारतं स्थास्यति क्व ॥६॥

नटी—आर्य ! सत्यमेतत् । किन्तु संस्कृतभाषाविषयक एकोऽपरोऽपि परिवादः प्रचलति यत् संस्कृतनाटकेषु कोऽपि नवीनो विषयो नास्ति येन काचन साम्प्रतिकी समस्या समाधानमासादयेत् ।

सूत्र—०आर्ये ! एष परिवादः साम्प्रतं साम्प्रतो न । अधुना बहूनि काव्यनाटकानि निर्मितानि निर्मीयन्ते च येषु बह्वः साम्प्रतिक्यः समस्याः स्वं समाधानमासादयन्ति । त्वमधुनैव द्रक्ष्यसि परिषदोऽस्या अनुरञ्जनार्थं प्रयोक्ष्यमाणं रक्तदानं नामाभिनवं नाटकं नवेन संविधानकेन प्रस्तुतीकृतम्, यत्र—

भारतीयसमाजस्य रूपं विकृतिमापयन् ।
प्रसृतो यौतकादानरोगोऽधिक्षिप्ततां गतः ॥७॥

नटी—तत् सत्यम् । किन्तु प्राचीनतामेव परिपुष्णन्तो रूढ़िग्रस्ता जनाः नवं संविधानकमिदं विनिन्दिष्यन्ति ।

सूत्र०—आर्ये ! कथयामि ते भूतार्थम् । स्मर इदानीं महाकविकालिदासस्य भणितिमिमाम्—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः[1] ॥८॥

यत्तु विनिन्दिष्यन्तीति ब्रूषे तन्न भीतेः कारणम् । यतो हि—

लोका अन्यं विनिन्दन्तो दोषं तस्मिन् जने स्थितम् ।
परिष्कुर्वन्ति तस्मात्ते भूषका न तु दूषकाः ॥९॥

तदेहि, अनन्तरकरणीयं सम्पादयावः । पश्य, परिषदियमस्माकं नूतनं प्रयोगं द्रष्टुं समुत्सुका वर्त्तते । अस्माकं कुशीलवाश्च प्रयोगेऽस्मिन् स्वं स्वं नियोगमनुष्ठातुं प्रस्तुताः सन्ति । तदागम्यताम् ।

नटी—यदाज्ञापयत्यार्यः । (निष्क्रान्तौ)

## प्रस्तावना

—:o:—

### (द्वितीयं दृश्यम्)

(स्थानम्—एकं साधारणं लिपिकगृहम् । पञ्चषा आसन्द्यः, मध्ये एकं वस्त्राच्छन्नं काष्ठफलकम् । समयः—शिशिरस्य सन्ध्या, एकस्यामासन्द्यां प्रावारकाच्छादितशरीरा स्थिता लिपिकस्य शैलेन्द्रस्य

1. मालविकाग्निमित्रम्, १/२

पत्नी वसुन्धरा ऊर्णावस्त्रं वयाना शैलेन्द्रस्यागमनं प्रतीक्षमाणा यदा-कदा बहिरवलोकयति। सहसा उपानद्-ध्वनिः श्रूयते। शैलेन्द्रः समागत्य परिश्रान्त इव एकस्यामासन्द्यामुपविशति।)

वसुन्धरा—प्रत्यावर्त्तने महान् विलम्बो जातः। अतीव श्रान्त इव लक्ष्यते भवान्!

शैलेन्द्रः—मा पृच्छ। अद्य त्वहमेतादृशः परिश्रान्तोऽस्मि यादृशोऽहं जीवने कदापि श्रान्तो नाऽभवम्। अद्याहमपमानस्य कटुकं विषं निपीय प्रत्यागतोऽस्मि, तथाचेयं स्थितिरेकस्मिन्नेव स्थाने न, त्रिष्वपि स्थानेष्वियमेव स्थितिः सञ्जाता। भगवान् दीनं मनुष्यं निःसन्तानमेव कुर्यात् तद् वरम्, किन्तु तमसौ ससन्तानं कर्तुमिच्छति चेत् तस्मै स कन्यां कदापि न प्रददातु।

वसु०—अस्तु, स्थानेषु तेषु त्रिषु किं वृत्तमित्यहमपि श्रोतुमिच्छामि।

शैलेन्द्रः—वृत्तं किम्? त्रिभ्य एव स्थानेभ्योऽहं अस्पष्टम्, स्पष्टम्, अतिस्पष्टं निषेधवचः श्रुत्वा समायातोऽस्मि। प्रथममहं स्वसहकर्मणो महेशचन्द्रश्रीवास्तवस्य गृहमगमम्। वेतनं तु स मत्तो न्यूनतरमेव लभते, किन्तु स पुत्रवानस्ति। कथयति किम्—"शैलेन्द्रजीव! भवांस्तु मम मित्रमास्ते। भवता सह मम सम्बन्धः मत्कृते गौरवस्य विषयोऽस्ति। उक्तञ्च—

"महत्त्वं याति नीचोऽपि सङ्गतो महता सह।
दुग्धपात्रे स्थितं मद्यं दुग्धत्वेनैव गृह्यते॥१०॥

अपि च, भवतः कन्या अतीव सुन्दरी, सुशीला, सुशिक्षिता च।

सर्वमेव समीचीनमास्ते। परन्तु मम पुत्रो रमेशः एम० ए० परीक्षामुत्तीर्येदानीं शोधकार्ये व्यापृतोऽस्ति। इच्छामि, स पी० एच० डी० इत्युपाधिं लब्ध्वा कुत्रचिदुच्चस्थाने नियुक्तो भवेत्, तदा तस्य विवाहस्य वार्त्ता विधीयेत।" इयमस्ति मम मित्रस्य महेशचन्द्रश्रीवास्तवस्य वार्त्ता।

ततोऽहं तवाग्रजेन श्रीशशिभूषणेन सह तव भगिनीपतेः श्रीरामप्रसादसहायस्य सकाशमगच्छम्। तेन प्रोक्तम्—'पश्यतु शैलेन्द्रजीव ! भवान् मम सम्बन्धी, भवतः किं मे गुप्तमास्ते। पुत्रो मे मम वश्यो न। स इदानीमभियन्ताऽस्ति, विचारास्तस्योच्चतराः सन्ति, स्वप्ना अपि तस्योच्चतरा विद्यन्ते। बहवो जनास्तद्विवाहार्थिनः समायान्ति। तैः सह स स्वयमेव सम्भाषते, कथयति— "सर्वप्रथममहं कन्यां द्रक्ष्यामि। कन्यायामभिप्रियतां गतायामहं तस्याः पितुरिदं कामयिष्ये यत् स मम विदेशयात्रायास्तथा विदेशे वर्षमेकं ममाध्ययनाय व्ययेन सम्भावितं समस्तं धनराशिं मदीयेन नाम्नाऽधिकोषे निक्षिपेदिति।" इयमेव स्थितिर्वर्त्तते शैलेन्द्रजीव ! किं करोमि ? भवता तु सर्वं विदितमेव, भवतः किं गोपायामि ? अहमपि साम्प्रतं तस्य वचसोऽनुवर्त्तनमेव श्रेयस्करमवगच्छामि।" इदमस्ति मे सम्बन्धिनो वृत्तम्। इदानीं लालाकैलासचन्द्रस्य वार्त्तामाकर्णय। (उच्चैः स्वरेण) तेन कैलासस्य वत्सेन……………

वसु०—(आक्षिप्य) शनैः शनैर्वदतु भवान्। लालाकैलासचन्द्रस्य पुत्रः शङ्करोऽभ्यन्तरमुपविष्टोऽस्ति। (गृहाभ्यन्तरमभि निर्दिशति)

शैलेन्द्रः—एष शङ्करोऽभ्यन्तरं किं करोति ?

वसु०—स उमया सहावयोः कृते चायमुष्णं करोति।

शैलेन्द्रः—चायमुष्णं करोति ! चायमुष्णं न करोति, मम मस्तिष्कमुष्णं करोति । (सक्रोधम्) वसो ! ममैतद् बलवदप्रियमस्ति । शङ्करोऽत्र किमर्थमायाति ?

वसु०—ननु शनैः शनैर्वदतु भवान् ।

शैलेन्द्रः—शनैः शनैर्वदतु ! सुष्ठु वदसि, अहं शनैः शनैरेव वच्मि । कन्यायाः पित्रा तु शनैरेव वक्तव्यमस्ति !

वसु०—आम् ! तु कैलासजीवेन किं कथितम् ?

शैलेन्द्रः—किं कथितम् ! स तु मां दृष्ट्वैव ववर्ष—'शैलेन्द्रजीव । मया ज्ञातं यद् भवानिह किमर्थमायातोऽस्ति । अहं भवद्द्वयस्याभिसन्धिं सम्यगवगच्छामि । भवान् मम शङ्करस्य पितृव्यः सञ्जातोऽस्ति, भवत्पत्नीच तस्य पितृव्या सञ्जाता । भवन्तावुभौ शङ्करं स्वं गृहमाहूय तथा स्वीयां सुन्दरीं कन्यां प्रदर्श्य तं प्रभावयितुमिच्छतः । भवतोरभिसन्धिरयं सफलो न भविष्यति । संक्षिप्यतामात्मनो मायाजालमिदम्, अन्यथा समाजेऽपमानितो भविष्यति भवान् । केनार्हत्वेन भवान् मया सह सम्बन्धं कर्तुमायातोऽस्ति ? मम पुत्रो गृहशल्यचिकित्सकोऽस्ति । तेन विदेशं गत्वा एफ०आर०सी०एस० इत्युपाधिः प्राप्तव्योऽस्ति । अहं तु तस्य गृहे शङ्करस्य विवाहं करिष्यामि यस्तस्य विदेशयात्रायै एफ०आर०सी० एस० इत्युपाधिं प्राप्तये च व्ययत्वेन सम्भावितं समस्तं धनराशिं तस्य तिलकात् पूर्वं तदीयेन नाम्नाऽधिकोषे निक्षेप्स्यति । कन्यायाः शिक्षया दीक्षया च मे किमपि प्रयोजनं नास्ति । अहं भवता सह सम्बन्धस्य वार्तामपि कर्तुं नेच्छामि । इतो गन्तुं शक्नोति भवान् । किन्तु

श्रूयतामिदम् । अहं भवन्तं पुनः सचेतसं करोमि । मम शङ्करस्योपरि भवन्तौ स्वं मायाजालं नैव विस्तारयताम्, नो चेद् भवन्तौ कुत्रापि न स्थास्यतः ।" लालाकैलासचन्द्रस्य गृहादेवमपमानितो भूत्वाहमिहैव समायातोऽस्मि । वसो ! मन्ये मया पूर्वजन्मनि किमपि जघन्यं पापकर्म कृतं यस्य दण्डमहं कन्यापिता भूत्वाऽनुभवामि, अनुभविष्यामि च यावज्जीवनं दण्डमिमम् ।

वसु०—न हि ! भवानेतावान् हताशो हतोत्साहश्च मा भवतु । अस्मिन् वितते विशाले च जगति कुत्रचिदस्माकमपि स्थितिः सम्भविष्यत्येव । कस्य कन्याऽविवाहितैव स्थिताऽस्ति ? यावत् कुत्रचित् स्थितिर्न जायते तावत् तमस्यन्वेषणं विधीयते । भवान् पुरुषोऽपि सन् ईदृशो विकलो भवति चेदस्माकं का दशा भविष्यति ? (अभ्यन्तरं विलोक्य) वत्से उमे ! पितृचरणाय चायमानय ।

उमा—इयमानयामि मातः !

(उमा शङ्करश्च चायमानयतः । उमा शैलेन्द्राय शङ्करो वसुन्धरायै चायं प्रदत्तः ।)

वसु०—(पीत्वा) अद्य चायः साधु विनिर्मितोऽस्ति ।

उमा—मातः ! एष शङ्करस्य करस्य चमत्कारः । अद्यानेन विशिष्टश्चायो विनिर्मितः ।

शङ्करः—न हि, पितृव्ये ! मन्निर्मितश्चायस्तु बहिः क्षिप्तोऽस्ति । मयाऽनवधानतया तस्मिन् शर्कराऽस्थाने लवणं प्रक्षिप्तम् । अत

इयं ममोपहासं कुरुते। वस्तुतः, चाय एष उमयैव सुनिर्मितः। (वसुन्धरा उमा च हसतः)

शैलेन्द्रः—(पीत्वा) शङ्कर! अहं त्वां किमपि वक्तुमिच्छामि। अत्रोपविश। (उमां प्रति) त्वं गच्छ, भोजनं प्रस्तुतीकुरुष्व। मयाऽद्य शीघ्रमेव भोक्तव्यमस्ति। अद्य मया यावद् दिनं किमपि न भुक्तम्।

(शङ्कर एकस्यामासन्द्यामुपविशति, उमाऽभ्यन्तरं प्रविश्य कक्षस्यैकस्मिन् कोणे स्थिता तयोःसम्भाषणं शृणोति।)

शैलेन्द्रः०—पश्य, शङ्कर! त्वं वयस्कोऽसि, सज्ञानोऽसि। उमया सह तवेयं संगतिः समुचिता न प्रतिभाति। वयं निर्धनाः, कन्यावन्तः स्मः। निर्धनेषु सर्वेषामङ्गुलयः पतन्ति। मया उमाया विवाहः करणीयोऽस्ति; यदर्थमहं प्रयत्नवानस्मि। अहमिच्छामि यत् त्वयाऽत्र नैवागन्तव्यमिति।

शङ्करः— भवान् सुष्ठु वदति पितृव्यजीव! मयाऽनुचितमनुष्ठितम्। अहं गच्छामि। भवतः प्रतिष्ठाया बाधकत्वेन मया न स्थास्यते। (अवनतमुखः प्रतिष्ठते)

उमा— (प्रविश्य) मातः! महानसे लवणं नास्ति। सम्पूर्णमेव लवणं शङ्करेण चाये प्रक्षिप्तम्। अहं पार्श्वस्थापणतो लवणमादाय द्रुतमायामि। (बहिर्निर्गत्य शङ्करं प्रति) शङ्कर! मां क्षमस्व।

(शङ्करः किमप्यनुक्त्वैव, उमां वारमेकमवलोक्य, शनैः शनैः निर्गच्छति, उमां तं पश्यन्ती तिष्ठति।)

॥ अवनिकापातः ॥

—:o:—

(तृतीयं दृश्यम्)

(स्थानम्—गृहस्योपवेशनकक्षः। समयो मध्याह्नः। वसुन्धरा शैलेन्द्रौ सम्भाषमाणौ दृश्येते)

वसु०— अद्य भवान् कार्यालयादतीव शीघ्रं समायातः, किञ्चित् खिन्न इव लक्ष्यते, केनापि सह किमपि सञ्जातं किम् ?

शैलेन्द्रः—सञ्जातं किम्। केवलमिदमेवावगच्छ यत् समाजे निर्धनानाम-स्माकं स्थितिरिदानीमसम्भवा।

वसु०— भवतु, वृत्तं किमास्ते ?

शैलेन्द्रः— वृत्तमिदमस्ति यदद्य यदैवाहं कार्यालयं गतः, मम मित्रं महेशचन्द्रश्रीवास्तवः मामेकान्ते नीत्वा प्रोवाच—"शैलेन्द्र-जीव ! भवता लालाकैलासचन्द्रस्य किमपकृतं यत् स यं कमपि पश्यति तं भवद्विषयां निन्दावार्तामिव ब्रूते। अद्य स मया मार्गे दृष्टः। स पुत्रवानस्ति, अत स्तं प्रति मया भवतः कन्यायाः सम्बन्धे चर्चा कृता। भवतो नाम श्रुत्वैव स वक्तुमारब्धवान् —'शैलेन्द्रप्रसादस्य गृहे स्वपुत्रस्योद्वाहं कः करिष्यति ? स तु स्वपुत्रीं प्रदर्श्य बालकान् वशीकर्तुमीहते। ममापि पुत्रेण सह तेन एष एव चालश्चलितः।' स कथयति 'यदहं विवाहं करिष्यामि चेत् शैलेन्द्रप्रसादस्य पुत्र्या सह, अन्यथा यावज्जीवनमविहितविवाह एव स्थास्यामि।' किं कथयामि महेशजीव ! शैलेन्द्रेण मम पुत्रं प्रत्येतादृशो मन्त्रः प्रयुक्तो यत् तस्य मस्तिष्कमेव विपरीतं वर्त्तते। मम सर्वं एवोत्साहो ध्वस्तीकृतस्तेन शैलेन्द्रेण। मया चिन्तितमासीद् यत् [illegible]

रिष्यामि यदहं अनेनाहं स्वकन्याया उषाया अपि विवाहं सुतरां सम्पादयिष्यामि । किन्त्वहमिदानीं क्वचिदपि न स्थितः । शैलेन्द्रस्य कदापि भद्रं न भविष्यति । पश्यामि, स स्वकन्यायाः परिणयं कुत्र करोति ?' इत्थमेव स बहूनि वृत्तानि कथयन्नासीत् ।"

**उमा**— (प्रविश्य) पितृचरणाः ! किं चायमानयामि ?

**शैलेन्द्रः**—न हि वत्से ! चायपानस्याभिलाषो नास्ति । गच्छ, स्वं कार्यं कुरु । (उमाऽभ्यन्तरं प्रविश्य, कोणे स्थिता, उभयोर्वार्ताः शृणोति)

**शैलेन्द्रः**—इदमेव वृत्तमस्ति वसो ! यतः प्रभृति मया महेशस्य मुखात् कैलासस्य वार्ताः श्रुताः, मम मनो विक्षिप्तमस्ति । मनसीयमिच्छा सञ्जायते यदहं युवामादाय कुत्रचिन्निर्गच्छेयम्, अथवा उमाया गलं घोटयेयम्, अथवा स्वयं टिक्ट्वेंटीतिनाम विषं पीत्वा चिराय निश्चिन्तो भवेयम् ।

(उमा टिक्ट्वेंटीति विषस्य वार्तां निशम्य स्वं शयनकक्षमभिगच्छति ।)

**वसु०**—भवानतीवोद्विग्नोऽस्ति । एष उद्वेगो भवतः स्वास्थ्यस्याहिताय कल्पिष्यते । मया सुबहुशो निगदितोऽस्ति भवान् यदीश्वरेच्छया आवयोरुमाया अपि कुत्रचित् साधुरवस्थितिः सम्पत्स्यते तदर्थमियती उद्विग्नता नावश्यकी । साम्प्रतं विश्राम्यतु भवान् ।

**शैलेन्द्र**—कुतो मे विश्राम आरामो वा ! उमया मे सकल आरामोऽवच्छिन्नः, मम नेत्रयोर्निद्राऽप्यपहृता तया । त्वं तु गृहा-

भ्यन्तरं तिष्ठसि। बहिस्तु सर्वं मयैव श्रोतव्यं भवति। अहं कन्यायाः पिता यदस्मि—"कन्या पितृत्वं खलु नाम कष्टम्।"[1]

वसु०—तत् किमहमस्य कष्टस्य समभागिनी न? कन्याया माता स्वकीयां वयस्कामपरिणीतां कन्यां विलोक्य कष्टं नानुभवति किम्? कविवरभास एव कन्याया मातुर्मनसो व्यथां दुःखञ्च सम्यग् विदितवानस्ति—

"अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः।" ॥११॥

भवान् आरामं करोतु। ममापि सम्बन्धेऽस्मिन् किमपि करणीयमास्ते, तदपि लालाकैलासचन्द्रं प्रत्येव। विवाहस्य विषये स्त्रिय एव सामञ्जस्यं स्थापयितुं क्षमाः। महाकविकालिदासेनापि प्रोक्तं यदेतादृशेषु कार्येषु प्रायः स्त्रीणामेव बुद्धिः प्रशंसनीयाऽस्ति—"प्रायेणैवं विधे कार्ये पुरन्ध्रीणां प्रगल्भता[2]।" तद् भवता आरामः क्रियताम्, अहं श्वः सम्बन्धेऽस्मिन्नात्मनो बुद्धेः प्रयोगं कृत्वा पश्यामि कः कियति पानीये वर्त्तत इति।

शैलेन्द्रः—त्वं तेन दुष्टेन पुत्रव्यवसायिना कैलासेन सह वार्तां विधास्यसि?

वसु०—आम्! अहं तेनैव कैलासचन्द्रेण सह वार्तां करिष्यामि।

---

१. प्रतिज्ञायौगन्धरायणम्, २/७
२. कुमारसम्भवम्, ६/३२

भवता निश्चिन्तेन स्थातव्यम्। अहं भोजनमत्रैवानयामि। इहैव भुक्त्वा स्वल्पं स्वपितु भवान्।

शैलेन्द्रः—न हि। अहमिदानीं भोजनं न करिष्यामि। स्वल्पं शयनमेव मे आवश्यकं प्रतिभाति।

वसो ! महदिदं दुःखम् ! तृणच्छन्नकूपोपमो मुखमधुहृदयविष एष समाजः कुत्र यास्यतीति न जाने।

एते प्रवञ्चका लोके पुत्रवाणिज्यवृत्तयः।
वदन्त्यन्यत् समाजेषु कुर्वन्त्यन्यद्धद् गृहे स्वके ॥१२॥
विनिन्दन्ति महावाग्भिर्यौतकादानकुप्रथाम्।
किन्त्वेते प्रथयन्त्येतामात्मनः कर्मणा स्वयम् ॥१३॥
परोपदेशे पाण्डित्यं सर्वेषामिह वर्त्तते।
कथने करणे किन्तु वर्त्तते महदन्तरम् ॥१४॥

वसु०—भवतु, स्वपितु भवान्। अहं तावदभ्यन्तरं गत्वा पश्यामि; उमा किं करोतीति।

( वसुन्धराऽभ्यन्तरं गच्छति, शैलेन्द्रः शयनस्य चेष्टां कुरुते। )

॥ जवनिकापातः ॥

इति प्रथमोऽङ्कः

—:o:—

## द्वितीयोऽङ्कः

### ( प्रथमं दृश्यम् )

(स्थानम्—उमायाः शयनकक्षः। उमा शय्यायामुपविष्टा टिक्ट्वेंटीतिविषकूपिकां हस्तेकृत्य तां पश्यन्ती दृश्यते।)

उमा—तत् पितृजीवो मत्कृते टिक्ट्वेंटीतिविषं पातुमिच्छति। स इदं पीत्वा चिराय निश्चिन्तो भवितुमिच्छति। स मम विवाहार्थमेतावांश्चिन्ताकुलोऽस्ति यत् कुत्रचित् साफल्यस्याप्राप्तौ स निराशः सन् मम ग्रीवां घोटयितुं टिक्ट्वेंटीतिविषं पातुं वा समुद्यतोऽस्ति।··· ··· ··· तत् किमस्माकं कन्यानां जन्म निर्धनयोर्मातापित्रोः कष्टप्रदानायैव सम्भवति ?········ पितृजीवो मां स्वपूर्वजन्मनो जघन्यपापस्य दण्डं मन्यते। ···· ···· ···· बाल्यावस्थायां मयि पितृजीवस्य कियान् स्नेह आसीत् ?··· ··· ··· परीक्षासु मम सर्वोत्तमां सफलतामवलोक्य तस्य मनसि कियान् प्रमोद उत्पद्यते स्म। स्वमित्राण्यामन्त्र्य स प्रीतिभोजं करोति स्म। मम माता प्रतिवेशिभ्यो मिष्टान्नं वितरति स्म। जनाः कथयन्ति स्म—'शैलेन्द्रजीवस्यायं पूर्वजन्मनः पुण्योदयोऽस्ति, भाग्योदयोऽस्ति यत् तेनेदृशी सुन्दरी, सुशीला, सुशिक्षिता च कन्या लब्धा।' पितृजीवोऽपि मदीयामिमां प्रशंसामाकर्ण्य प्रहर्षमिश्रं गर्वमनुभवति स्म। स एव पितृजीवोऽद्य मम विवाहसम्बन्धे कुत्रचित् स्थिरतां न प्राप्ते मामात्मनः पूर्वजन्मनो जघन्यस्य पापस्य फलं मनुते तथा मम ग्रीवां घोटयितुं टिक्ट्वेंटीतिविषं वा पातुं प्रवृत्तोऽस्ति।

तत् किं जीवनयापनाय जगति स्त्रीणां सदाऽपेक्षितः
पुंसामाश्रय एतदर्थमिह ता वैवाहिके जीवने
बद्धाः सन्तु सदा निरुद्धगतयस्तिष्ठन्तु वाचंयमाः
साफल्यं किमिहैव याति सकलं नारीजगज्जीवनम् ??१॥
नारीणांत्वनिवार्यमस्ति विहितं वैवाहिकं जीवनं,
पुंसां किन्त्वविवाहिता हि बहवः कालं नयन्ते सुखम्।
तेषान्तूद्वहनाय सन्ति पितरो न व्याकुलाश्चिन्तया
तत् कन्यापितरो वृथा कथमहो कन्याविवाहाकुलाः ??२॥
नारी नरश्चास्य समानमेव द्वयं समाजस्य सशक्तमङ्गम्।
तदद्य कस्मान्मनुते समाजो नारीं शिरोभारमिव स्वकीयम्॥३॥

मां सुशिक्षितां कर्तुं पितृजीवः स्वसुखनिरपेक्षः सन् स्वस्य वेतनस्याधिकांशं मदर्थमेवोपयुक्तवान्, तदपि चानया निःस्पृहभावनया यदस्याः शिक्षायाः सदुपयोगोऽपरस्मिन् परिवारे भविष्यति। किन्तु पुत्रव्यवसायिनां पितॄणां दृष्टौ कन्यानां शिक्षायाः किमपि महत्त्वं नास्ति।.... तत् किमहं स्वशिक्षाबलेन क्वचिदुचितां वृत्तिमासाद्याविवाहितं जीवनं यापयन्ती मातापित्रोः सुखप्रदा न सम्भविष्यामि ? यदि सर्वा एव शिक्षिता बालिकाः स्वकीयशिक्षायाः सदुपयोगमेवमेव कर्तुं व्यवस्यन्ति तर्हि स्वल्पैरेवाहोभिः समाजस्येयं जटिला समस्या स्वं समाधानं स्वयमेव समासादयिष्यति। किन्तु पितृजीवस्तु प्राचीनविचारवानस्ति। स सामाजिकव्यवस्थायै वैवाहिकं बन्धनमपरिहार्यं मन्यते। स तु मां कस्यचिद् गले बद्ध्वैव विगतचिन्तो भवितुमिच्छति; यदपि तस्य निर्धनपुत्र्याः पुत्रव्यवसायिनस्तथाकथिते उच्चपरिवारे नरकस्य यातना भोक्तव्या भवेत्। अस्तु, स्वयमेवाहमिदं टिकूट्वेंधीतिविषं पीत्वा तं वीतचिन्तं करोमि। यद्यपि स मम मृत्युना

मर्मान्तिकमाघातमेष्यति, तथापि स आघातमिमं सोढुं प्रयतिष्यते, शनैः शनैः मां विस्मरिष्यति च। मम माता तस्यातीव सुन्दरमवलम्बनं वर्त्तते।.....तत् टिक्ट्वेंटीकूपिके ! अधुना त्वमेव मम जीवनस्यान्तिमा सहचरी भव।

(सा पूर्णां टिक्ट्वेंटीकूपिकां पिबति तथा प्रावारकेणात्मानमाच्छाद्य स्वपिति। स्वल्पैरेव क्षणैः सा स्वान्यङ्गानि क्षेप्तुमारभते। वसुन्धरा तस्या अङ्गक्षेपध्वनिमाकर्ण्य सत्वरं तस्याः कक्षं प्रविशति। शय्यायां पतितां रिक्तां टिक्ट्वेंटीकूपिकां दृष्ट्वा सा चीत्करोति टिक्ट्वेंटी···। द्रुततरं गत्वा सा शैलेन्द्रमुद्बोधयति।)

वसु०— उत्तिष्ठतु, उत्तिष्ठतु। उमया टिक्ट्वेंटीतिविषं पीतम्। सा स्वान्यङ्गानि भृशमुत्क्षिपति।

शैलेन्द्रः—(ससम्भ्रममुपविश्य) किमुक्तम् ? उमया टिक्ट्वेंटीतिविषं पीतम् ?

वसु०— आम् ! शीघ्रं पार्श्ववर्त्तिगृहं गत्वा दूरभाषेण चिकित्सालयादातुरयान[1]माकारयतु, उमाञ्च चिकित्सालयं प्रापयतु।

शैलेन्द्रः—(ससम्भ्रमं शीघ्रञ्चोत्थाय) अहं त्वरितमातुरयानमाकारयामि।

(झटिति निर्गच्छति)

॥ जवनिकापातः ॥

—:०:—

---

१. आतुरयानम्='ऐम्बुलेंश' इत्याङ्गलभाषायाम् :

(द्वितीयं दृश्यम्)

(स्थानम्—चिकित्सालयः। सघनपरिचर्याकक्षे गुह्शल्यचिकित्सकः शङ्करः एकया उपचारिकया सहोपविष्टः रोगितालिकां वीक्षते। द्वौ चिकित्सालयसेवकौ दोला[1]यामुमामभ्यन्तरमानयतः। उमायाः पिता शैलेन्द्रोऽपि ताभ्यां सहाभ्यन्तरं प्रविशति।)

सेवकौ—चिकित्सकमहोदय ! विषस्य घटनाऽस्ति, बालिकेयम्।

शङ्करः— भवतु, पश्यामि। शय्यायां स्वापय।

(दोलावाहकौ उमां शय्यायां स्वापयतः। शङ्करः वस्त्रमपसार्य उमायाः मुखं पश्यति। सहसा स चीत्करोति—उमे !)

शैलेन्द्रः—शङ्कर ! उमायाः प्राणान् रक्ष। अहमाजीवनं तव कृतज्ञः स्थास्यामि।

शङ्करः—पितृव्यजीव ! धैर्यं धारयतु भवान्। अहमधुनैव यत्नं करोमि। (उमाया नाडीगतिं परीक्ष्योपचारिकां प्रति) भगिनि ! शीघ्रं पानीयमारोपय।

(उपचारिका उमायाः शरीरे पानीयमारोपयति। शङ्करः उमाया नाडीगतिं परीक्षमाणो मध्ये-मध्ये तस्या अक्षिण्यु-न्मील्यावलोकयति। सहसा स उद्विग्नो भूत्वा दूरभाषमुत्था-पयति।)

शङ्करः— श्रीमन् ! अहम् एस० प्रसादः सघनपरिचर्याकक्षतो ब्रवीमि। एका विषस्य घटनाऽस्ति। बालिकया टिक्ट्वेंटीतिविष-स्यैका पूर्णा कूपिका पीताऽस्ति।...आम्, श्रीमन् ! एट्रोपीन-

---

१. दोला—स्ट्रेचर' इत्याङ्गलभाषायाम्।

स्मेसिक्सेत्यौषधद्वयं सूचिकया प्रयुज्य ग्लूकोजेतिपानीय-मारोप्यते। किन्तु नाड़ीगतिः शनैः शनैं दुर्बलतां व्रजति। कृपया शीघ्रमागम्यताम्।....आम्, श्रीमन्! तत् करोमि। (उपचारिकां प्रति) भगिनि! कोरामिनेत्यौषधं प्रयुज्यताम्।

(उपचारिका सूच्या तस्य प्रयोगं करोति। चिकित्सालयाधीक्षकः डॉ० खन्नाः प्रविशति। स उमाया नाडीगतिं हृदयगतिञ्च परीक्ष्य तस्या अक्षिण्युन्मील्यावलोकयति।)

डॉ० खन्नाः--रक्तमपेक्ष्यते। एककूपीमितं रक्तम्! (उपचारिकां प्रति) अपि रक्ताधिकोषे रक्तं वर्त्तते?

उपचा०--श्रीमन् रक्ताधिकोषो रिक्तमास्ते।

डॉ० खन्नाः—तदा रक्तं कः प्रदास्यति?

शैलेन्द्रः—अधीक्षकमहोदय! अहमुमाया मन्दभाग्यः पिताऽस्मि। मम शरीरात्, यावदपेक्षितमस्ति, रक्तं निःसार्यताम्। उमाया मे प्राणान् रक्षतु। अहं यावज्जीवनं भवतः कृतज्ञः स्थास्यामि।

डा० खन्नाः—(शैलेन्द्रमवलोक्य) न हि। भवतो वयः रक्तनिःसारणक्षमं नास्ति कूपीमितं रक्तमपेक्ष्यते।

शङ्करः—श्रीमन्! मम शरीरात्, यावदपेक्षितमस्ति, रक्तं निःसार्यताम्। अहमेतदर्थं प्रस्तुतोऽस्मि।

डॉ० खन्ना:—(शङ्करं वीक्ष्य) त्वं रक्तं दास्यसि ? सम्भवतः, इतोऽप्यधिकं रक्तमपेक्षितं भवेत् । इदं सङ्कटापन्नमस्ति ।

शङ्करः—नात्र काचित् चिन्ता, श्रीमन् ! अहं प्रस्तुतोऽस्मि ।

डॉ० खन्ना:—(शङ्करं पश्यन् क्षणं स्थित्वा) तत् प्रस्तुतो भव । (उपचारिकां प्रति) रक्ताधानयन्त्रमानय । युगपदेव प्रक्रियाद्वयं करणीयमास्ते—डॉ० शङ्करस्य शरीराद् रक्तनिःसारणं तथा उमायाः शरीरे तस्याधानञ्च । समयोनास्ति । उभयोः रक्तसमतां शीघ्रं परीक्ष्य रक्ताधानमारभ्यताम् ।

उपचा०-यदाज्ञापयति श्रीमन् !

(उपचारिका यन्त्रमानीय, उभयोः रक्तसमतां परीक्ष्य रक्ताधानप्रक्रियामारभते । शङ्करस्य शरीराद् रक्तं निःसृत्य उमायाः शरीरं प्रविशति ।)

डॉ० खन्ना:—(उमाया नाडीगतिं परीक्ष्य) साधु । (शैलेन्द्रं प्रति) सङ्कटं दूरीभूतम् । इदानीं काऽपि चिन्ता न । (उपचारिकां प्रति) स्वल्पेन कालेनेयं संज्ञां लप्स्यते । संज्ञां प्राप्यैव इयं वक्तुं चेष्टिष्यते । इयं वक्तुं नानुमन्तव्या । अस्यै नारङ्गरसो दातुं शक्यते । पूर्णमाराममपेक्षते इयम् । (शङ्करमभिलक्ष्य) डॉ० शङ्करोऽपि पूर्णमाराममपेक्षते । इदानीमेष शैथिल्यमाप्तोऽस्ति । द्वादशघण्टा यावदयं शय्यायामेवमेव सुप्तः स्थास्यति । अयं जलमभिलषति चेज्जलमस्मै दास्यते । नारङ्गरसोऽप्यस्मै दातुं शक्यते । उमायां संज्ञामाप्तायां

रक्ताधानप्रक्रिया स्थगिता भविष्यति। उभयोः कुले कश्चन चिन्ताया विषयो न। तथाऽप्यावश्यकता चेदहं दूरभाषेण सूचनीयः। गच्छाम्यहम्। आम्। कार्यमेकं कुरु। दूरभाषेण डॉ० शङ्करस्य पितरमाकारय।

उपचा०— यदाज्ञापयति भवान् (डॉ० खन्नाः निर्गच्छति, उपचारिका दूरभाषं गृह्णाति)।

उपचा०—अहं गान्धिस्मारकचिकित्सालयाद् ब्रवीमि।··· सघनपरिचर्याकक्षतः।··· आम्, श्रीमन्! डॉ० शङ्करः सघनपरिचर्याकक्ष एव वर्त्तते। स किञ्चिदस्वस्थः सञ्जातोऽस्ति। भवता स्वल्पकालाय इहागम्यताम्।··· न हि, श्रीमन्! तादृशी काचिद् वार्ता न। स वक्षोवेदनया किञ्चित् पीडितोऽस्ति।··· आम्। (दूरभाषं निदधाति। स्वल्पकालात् परं लालाकैलासचन्द्रः प्रविशति)।

कैलास०—(शङ्करं तथाविधमवलोक्य व्याकुलस्वरेण) भगिनिके! मम शङ्करस्य किं सञ्जातम्? (अस्मिन्नेव क्षणे उमा संज्ञां लभते)।

उमा०— पानीयम्···

(उपचारिका तां जलं पाययति तथा रक्ताधानप्रक्रियां स्थगयति।)

कैलास०—भगिनिके! त्वं कथयसि कथं न? मम शङ्करस्य सहसा किं वृत्तम्? (उपचारिका कैलासं तूष्णीं स्थातुं निर्दिशति। कैलासः शङ्करस्य शिरोधानमुपतिष्ठति। उमा पूर्णसंज्ञां प्राप्य परितः पश्यति। सा शङ्करं तथाविधं संज्ञाशून्यमवलोक्य चीत्करोति—'शङ्कर! तव किं सञ्जातम्?' सा उत्थातुं चेष्टते।)

शैलेन्द्र :— (उमां स्वापयन्) उमे ! तूष्णीं तिष्ठ। चिकित्सकमहोदयेन त्वं वक्तुं नानुमताऽसि। तूष्णीं तिष्ठ वत्से ! मा वद। आरामं कुरु।

उमा०—पितृचरणाः ! अहं तूष्णीं स्थास्यामि, नैव वदिष्यामि। बालिकानान्तु तूष्णीं स्थातव्यमेवास्ते।

शङ्करः—(संज्ञां लब्ध्वा, परितो विलोक्य) उमे ! त्वं कीदृशी वर्तसे ? भगिनि ! डॉ० खन्नामहोदयमाह्वय। स्यात्, उमायाः किमप्यधिकं रक्तमपेक्षितं भवेत् ?

उपचा०—डॉक्टरशङ्कर ! तूष्णीं तिष्ठतु भवान्। अधिकं मा वदतु। डॉक्टरखन्नामहोदयेन वक्तुं नानुमतोऽस्ति भवान्। आरामं करोतु !

शङ्कर :—भगिनि ! अहं भृशं पिपासितोऽस्मि।

(उमा उत्थाय तं जलं पाययति। शङ्करः निमीलितनेत्र एव जलं पिबति। स्वल्पकालानन्तरमक्षिण्युन्मील्य उमामवलोक्य च)

शङ्करः—उमे ! मम कण्ठः शुष्यति, प्रचुरं पयः पायय। (उपचारिकां प्रति) भगिनि ! दूरभाषेण पितृजीवमाकारय। अहं तं किञ्चित् कथयितुमिच्छामि।

उपचा०—डॉक्टरशङ्कर ! अधिकं मा ब्रवीतु भवान्। तूष्णीं स्थित आरामं करोतु।

शङ्कर :—न हि, भगिनि ! अहं तूष्णीं न स्थास्यामि। (सावेशम्) मया निजं पुत्रव्यवसायिनं पितरं प्रति किञ्चित् कथनीयमास्ते। आह्वय तम्। (सावेगं कासितुमारभते) भगिनि ! अहं वक्षसि बलवतीं वेदनामनुभवामि। डॉक्टरखन्नामहोदयमाह्वय। उमे ! पानीयम्....(कासते)। (सहसा

डॉक्टरखन्नाः प्रविशति । सर्वे उत्तिष्ठन्ति । शङ्करः उपवेष्टुं चेष्टते ।)

डॉ० खन्नाः—(शङ्करं गृहीत्वा शय्यायां स्वापयन्) डॉ० शङ्कर ! अधीरो मा भव । त्वमतिशीघ्रं स्वस्थो भविष्यसि । (उमां प्रति) उमे ! त्वं कीदृशी वर्त्तसे ?

उमा—(किञ्चिल्लज्जामभिनीय) अहं पूर्णतः स्वस्थाऽस्मि ।

डॉ० खन्नाः—उमे ! त्वया चाञ्चल्यमाचरितम् । ईदृशी बालिशता न कर्तव्या । त्वादृशीनां शिक्षितानां बालिकानामिदं न शोभते । (शैलेन्द्रं प्रति) शैलेन्द्रजीव ! मया भवत्सुहृदो महेशचन्द्रश्रीवास्तवस्य मुखाद् भवतां सर्वं वृत्तमाकर्णितम् । डॉक्टरशङ्करः पूर्णतयाऽस्वस्थोऽस्ति । अस्य परिचर्यायै उमाया अत्रावस्थितिरावश्यकी ।

कैलास :— (शैलेन्द्रमभि बद्धाञ्जलिः सन्) शैलेन्द्रजीव ! भवन्तं क्षमामभियाचे अहं भवन्तं प्रति, उमां च प्रति सापराधोऽस्मि ममापराधः क्षम्यताम् । शङ्करस्य परिचर्यायै उमामत्र विजहातु भवान् ।

शङ्कर :—न हि, पितृचरणाः ! मया एफ. आर. सी. एस. इत्युपाधिं प्राप्तुं; विदेशयात्रा करणीयास्ति, स्वतिलकस्य रूप्यकाणामर्द्धभागेन मया स्वभगिन्या उषाया विवाहोऽपि करणीय आस्ते ।

कैलास :—मामधिकं मा लज्जयस्व । मया त्वां, प्रति, उमां प्रति, समाजं च प्रति अन्यायो विहित इति सखेदमहमङ्गीकरोमि । युवां मां क्षमेथाम् ।

डॉ. खन्ना:—(शैलेन्द्रं प्रति) शैलेन्द्रजीव ! कथं तूष्णीं स्थितो भवान् ? ब्रूते कथं न ? भवन्तं प्रति ममाप्यनुरोधः। शङ्करेण स्वशरीरस्य सर्वं रक्तं दत्त्वा, आत्मानं सङ्कटे निक्षिप्य च उमायाः प्राणा रक्षिताः। इदानीं भवत इदं कर्तव्यमस्ति यद् भवान् स्वस्य रक्तस्य, अर्थादुमायाः दानं कृत्वा शङ्करस्य रक्षां करोत्विति। अहं कामये यद् भवतोः पवित्ररक्तदानेन ममायं सघनपरिचर्याकक्षः रक्तदानस्यादर्शोऽधिकोषः सम्पद्यताम्। लालाकैलासचन्द्रेण स्वकीयोऽपराधः स्वीकृतः, क्षमा च प्रार्थिता। अहं विश्वसिमि यन्महिलासु क्रमशः समुद्भवता नवजागरणेन प्रभाविता सन्तः पुत्रव्यवसायिनः पितरः अद्य श्वो वा स्वमपराधमङ्गीकरिष्यन्त्येव। भवान् शङ्करस्य रक्षार्थं शङ्करस्य पितरं क्षमतामिति मे पुनरनुरोधः।

कैलास :—(पूर्ववद् बद्धाञ्जलिः शैलेन्द्रं प्रति) शैलेन्द्रजीव ! भवन्तं प्रति कृताऽपराधस्य मे हृदयमतिशयं लज्जते भवन्तं क्षमां प्रार्थयितुम्। किन्तु पुत्रं सङ्कटे पतितं दृष्ट्वा पितृहृदयं मे भवन्तं क्षमां प्रार्थयते। कृपया अपराधोऽयं गुरुतरोऽपि क्षमापथमानीयताम्। डॉक्टरखन्नामहोदयस्यानुरोधो नावमन्यताम्।

शैलेन्द्र :—लालाकैलासचन्द्रजीव ! कुतो मे इयती भाग्यसम्पद् यदहं भवतः प्रार्थयितव्यो भवेयम्। किन्तु डॉक्टरखन्नामहोदयेन उमायाः शङ्करस्य च प्राणा रक्षिताः, अनयोः पुनरुज्जीवनं कृतम्। अतोऽहं डॉक्टरखन्नामहोदयस्य प्रस्तावमिमं सहर्षमङ्गीकरोमि।

( सर्वे सुप्रसन्नाः भवन्ति )

डॉ. खन्ना :—शैलेन्द्रजीव ! महानामोदो मे मनसि । अहं हृदयेन भवतो धन्यवादान् करोमि । सहैवाहं नवयुवकस्य डॉक्टरशङ्करस्योत्साहमिममभिनन्दयामि येनानुप्रेरितोऽयमात्मनो बहुमूल्यं जीवनं महति सङ्कटे निक्षिप्य उमायाः प्राणान् रक्षितवान् । उमाऽपि स्वं शरीरमुपेक्ष्य पूर्णमनोयोगेन डॉक्टरशङ्करस्य परिचर्यां करोति, एतदर्थमहं हृदयेनास्याः श्लाघां करोमि ।

कैलास : -- (शैलेन्द्रं प्रति बद्धाञ्जलिः सन्) शैलेन्द्रजीव ! अहमाजीवनं कृपामिमां भवतो न विस्मरिष्यामि ।

डॉ० खन्ना :—शैलेन्द्रजीव ! अस्मात् परं भवतः किं प्रियमुपकरोमि ?

शैलेन्द्र :—भवता उमायाः शङ्करस्य च प्राणा रक्षिताः । धनवता कैलासेन सह निर्धनस्यास्य शैलेन्द्रस्य सम्बन्धो योजितः; उमाशङ्करौ उमाशङ्कराविव सम्पृक्तौ । अतः परं किं प्रियमवशिष्टं वर्त्तते, यदाशास्त्वेष जनः, तथापीदमस्तु—

भारतीयसमाजे या कुष्ठरोग इवाधुना ।
प्रसृता यौतकादानकुप्रथा क्लेशकारिणी ॥४॥
प्रथयन्ति प्रथामेतां पुत्रवाणिज्यवृत्तयः ।
पितरः, कन्यापितॄणां निर्दयं रक्तचूषकाः ॥५॥
समाजस्य जलौकानामेषां हृत्परिवृत्तये ।
नारीषु शक्तिरूपासु नवा ... ॥६॥

अपि च— नवा देशभक्तिर्नवा प्रीतिरीति—
नवीना मती राष्ट्रनीतिर्नवा स्यात् ।
जगन्मानसे धर्मजात्यादिभेदान्
निहन्तुं, नवः साम्यभावोऽभ्युदेतु ॥७॥
सदाचारिता पूजिता स्याज्जनेषु
कदाचारिता मूलतो नाशमेतु ।
भवेत् संस्कृता भारती सर्वपूज्या
तया देश एषोऽभिवृद्ध्या विभातु ॥८॥

॥ जवनिकापातः ॥

॥ समाप्तमिदं डॉ० वनेश्वरपाठककृतं रक्तदानं नाम द्व्यङ्कि नाटकम् ॥

—:०:—

# लेखकस्यान्याः कृतयः

(प्रकाशिताः)

(१) संस्कृतकाव्यसंग्रहः.........रामनारायणलाल, बेनीप्रसाद, प्रयाग
(२) काव्यसिद्धान्तकौमुदी ......... ...बागला प्रेस, राँची (मुद्रकः)
(३) प्लवङ्गदूतम् (उत्तरप्रदेशशासनेन पुरस्कृतम्) ......सुबोधग्रन्थमाला, राँची
(४) स्वप्नवासवदत्तम् (व्याख्या) ... ,,
(५) रघुवंशम् (त्रयोदशसर्गः, व्याख्या) ... ,,
(६) कुमारसम्भवम् (तृतीयः सर्गः, व्याख्या) ... ,,
(७) कुमारसम्भवम् (पञ्चमः सर्गः, व्याख्या) ... ,,
(८) किरातार्जुनीयम् (द्वितीयः सर्गः, व्याख्या) ... ,,
(९) पञ्चतन्त्रम् (अपरीक्षितकारकम्) ... ,,
(१०) किरातार्जुनीयम् (प्रथमः सर्गः, व्याख्या) ... ज्योति, पटना
(११) कालिदासः (एकाङ्किरूपकम्) कामेश्वरसिंह दरभंगा संस्कृत-विश्वविद्यालयप्रकाशतम् (कालिदासीयोपरूपकाणां समुच्चयः)।
(१२) कविताः शोधनिबन्धाश्च ५० तोऽप्यधिकाः भारतस्य विभिन्न-पत्रिकासु प्रकाशिताः, आकाशवाणीतः प्रसारिताश्च सन्ति।
(१३) दिव्यपक्षी (कविता) वेलजियमदेशस्य (अल्वे) काव्यसंग्रहे प्रकाशिता।
(१४) कालिदास का साहित्य (Bibliography of Kalidasa's Literature) ज्योति, पटना।

(प्रकाश्यमानाः)

(१) यीशुचरितम् (खीस्तायनम्): बायबिल (न्यू टेस्टामेंट) ग्रन्थस्य ... संस्कृ...
(२) काव्यप्रकाश और उसके टीकाकार (राँचीविश्... डी० लिट० इत्युपाधिना सम्मानित...

(३) रक्षाबन्धनम् - ऐतिहासिक नाटकम् (मुद्रणस्थम्...